# वैदिक-भक्ति-ज्ञान-फलम्

अयमेव वैदिकोपास्य मम सर्वेश्वरो हिरण्यगर्भः



श्रीदण्डिसंन्यासिना रामतीर्थेन प्रणीतम्

प्रथमावृत्तिः २०००

विक्रम सं० २०१४

शाकः सं० १८७९

॥ ॐ ॥

# वेदोक्त-भक्ति-ज्ञान-फलम्

एतच्च दंडिसंन्यासिना श्री १०८ रामतीर्थेण विनिर्मितम्

तन्निवासश्च—

ग्रीष्मकाले—'रामभवन' भूपतवाला, हरिद्वार।

शीतकाले च—'मन्दिर सोनियां' पुराना बाजार, लुधियाना (पंजाब)

प्रकाशक—

लाला मुरारीलाल सोनी,

मुहल्ला सोनियाँ, लुधियाना

प्राप्तिस्थानम—

पं० अमोलकराम ज्योतिषी

मन्दिर सोनियां, पुराना बाजार, लुधियाना

प्रथमावृत्तिः १०००

# सम्मतिः

एषा लघुतरा पुस्तिका मया साद्योपान्तं सूक्ष्मेक्षिकयाऽवलोकिता। एषा नाणवपि शास्त्रीयं पन्थानमुल्लङ्घते। अनया च अशास्त्रीय-संस्कार-सम्भूता कापि संशीतिरवश्यमेव विनश्यति। सेयं जिज्ञासुभिः नूनमेवाऽवलोकनीया। एतदर्थमहं ब्रह्मविदे महात्मने लेखकाय बहुशो धन्यवादान् वितरामि। वांछामि चास्याः प्रचुरं प्रचारमिति।

**निगमानन्दः परमहंसः**

[ राष्ट्रभाषा-पतंजलिः, मंडलेश्वर-शिरोमणिः ]

निगम-निवास

हरिद्वार (उत्तर प्रदेश)



श्रीः १०८ दण्डी स्वामी रामतीर्थजी

# वेदोक्त-भक्ति-ज्ञानयोः फलम्

ओं नमो भगवते आदित्यमण्डलस्थाय ।

श्री गुरुभ्यो देवेभ्यो नमो नमः ।।

प्रियपाठकवृन्द ! मंत्रात्मको वेदो मंत्रब्राह्मणात्मका दशोपनिषदश्च सर्वसम्मताः संति । तदनुसारि ब्रह्मसूत्रं चापि सर्वसम्मतमेव । तदधिकृत्यैव भक्ति र्ज्ञानं तयोः फलं च निरूप्यते । क्वचिद् उपनिषत्सु प्रणवे एव ब्रह्मबुद्धिं कृत्वा प्रणवेनैव ब्रह्मण उपासनेति. वर्णितम् । क्वचिच्च प्रणवस्य वाचकतया ब्रह्मणश्च वाच्यतया ब्रह्मोपासनाख्या विद्यते वर्णनम् । परश्चात्र तु मायाविशिष्टस्य ब्रह्मणोऽभेदरूपाया उच्चोपासनाया दिङ्मात्रं प्रदर्श्यते ।

### तदधिकारी

येन पूर्वस्मिन् जन्मनि अस्मिन् जन्मनि वा अग्निहोत्रादीनि वैदिक-कर्माणि विहितानि, किंवा गायत्री-मंत्रस्य समाचरितान्यनेकानि पुरश्चरणानि, यद्वा निष्कामभावतया निष्पादिता जीवानामुपकृतिरिति। तेनैव हेतुना यस्य ऐहलौकिक-पारलौकिक-भोगेषु वैराग्यमुत्पन्नम् । स च ब्रह्मलोक-सुखं कामयते । स एव मायाविशिष्टस्य ब्रह्मणोऽभेदोपासनाया अधिकारी ।

### उपास्यब्रह्मणः स्वरूपम्

तैत्तिरीयोपनिषदो ब्रह्मानन्दवल्ल्या अष्टमेऽनुवाके भृगुवल्ल्याश्च दशमेऽनुवाकेऽपि एषैव श्रुतिः— "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" योऽस्मिन् पुरुषे तस्मिन् सूर्ये चाऽस्ति

स (सच्चिदानन्दः) उभयत्र एक एवेत्यनयोरर्थः। "य एषोऽन्तरादित्ये पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः तस्य पुण्डरीकमेव मक्षिणी" [ छां० अ० १, खं० ६ ] आनख-शिखं स स्वर्णरूपः। "असौ वा आदित्यो देव मधु" (छां०अ० २, खं० १) देवा अमृतरूपेण अनेन सूर्येण जीवन्ति। "द्वे वाव ब्रह्मणो रूपे" (बृ० उ० अ० २, ब्रा ३) निर्गुणस्य सच्चिदा-नन्दस्य ब्रह्मणो रूपद्वयम्। इति श्रुत्यनुसारं तयोरेकम् उपास्यरूपं सूर्यस्थानीयम्, यच्च सर्वेषु देवेषु वृहत्त्वात् अधिदैव-शब्देन निगद्यते। अपरञ्च उपासकरूपं मनुष्यस्थानीयम्; यच्च साधारणानां जीवानां कर्मयोनित्वात् सर्वेषु तेषूत्तमम् अध्यात्ममिति कथ्यते। इत्थं प्रकारेण उपनिषत्सु सूर्यस्थानीयं ब्रह्म ईश्वरो वा उपासनीयता-मुपयाति। "एतद्ध्येवाक्षरं ब्रह्म" ( कठ० अ० १, वल्ली ३, मं० १५-१६ ) "एतद् वै सत्यकाम" ( प्र० प्रश्न ५ ) इत्यादिषु श्रुतिषु इदमेवाऽपरं ब्रह्म। "हिरण्यगर्भः समवर्तताग्रे" इत्यादिना ऋग्वेदमंत्रेण एष एव हिरण्यगर्भोऽस्ति। "एष सर्वेश्वरः" ( माँ० श्रु० ६ ) एष एव सर्वज्ञः सर्वेश्वरोऽन्तर्यामीति। अयमेव शुद्धसत्त्वगुण-प्रधानो मायावृत्तिक ईश्वरोऽस्ति। एतस्मादेव सर्वेषां ज्ञातृत्वात् सर्वज्ञः। यश्चायं ज्ञानरूपेण सर्वव्यापकः, अस्य ज्ञानं वा व्यापकम्। अत एव सर्वेषामीश्वरः, अथवा प्रेरक-त्वात् सर्वेश्वरः। शुभाशुभस्य कर्मणः फलदातृत्वात् प्रार्थित-श्चाऽभ्यन्तरे प्रेरणाकर्तृत्वात् अन्तर्यामीति। अयमेव उपास्यं ब्रह्म ईश्वरो वाऽस्ति। स्मृतिप्रमाणैः गायत्रीमंत्रेण प्रातः सायं

सन्ध्यया तु सूर्यस्थानीयमुपास्यं ब्रह्म निश्चितमेवास्ति। यद्यपि सच्चिदानन्दः अहंवृत्तिरहितो निर्गुणरूपेणाऽस्ति ब्रह्म व्यापको वा। स च अहंवृति–सहितः नास्ति ब्रह्म किंतु परिच्छिन्नः। तथापि "सामीप्यात्तु तद्व्यपदेशः" (ब्र. सू. प्र. ४, पा ३. सू. ९) इत्यनुसृत्य निर्गुणस्य सच्चिदानन्दस्य ब्रह्मणः समीपत्वात् तस्यैव विशेषरूपत्वात् शुद्धसत्त्वगुण-प्रधानत्वाच्च हिरण्यगर्भोऽपि ब्रह्मेति प्रतिपादितम्, तस्मादेव अयमेवाऽस्ति उपास्यं ब्रह्म।

उपासना ( भक्तिः )

"य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि" ( छाँ. अ. ४, खं. ११ ) इति श्रुत्यनुसारं तथा "पूषन्नेकर्षे...... योसावसौ पुरुषः सोहमस्मि" ( ई. मं. १६ ) इति मंत्रानुसारं च आदित्यान्तर्गतस्य सुवर्णमयस्य पुरुषस्य परमात्मनः 'सोहमस्मि' इत्येवं रूपेण अभेदभक्ति विधातव्या। एवमेव प्रश्न-मांडूक्योर् ओंकारस्य अकारोकार-मकार-रूपाः त्रिमात्राः, आत्मनो विश्व-तैजस प्राज्ञ-नामकान् त्रीन् पादान्, ब्रह्मणश्च वैश्वानर-हिरण्यगर्भाऽन्तर्यामयाख्यान् अधिदैवरूपान् त्रीन् पादान् एकीकृत्य ब्रह्मणोऽभेद-रूपाया भक्तेरस्ति उपदेशः। "य आत्माऽपहतपाप्मा" ( छां. अ.८. खं.७) योऽयं परमात्मा पापवर्जितो जरारहितो मृत्युहीनः शोकशून्यः क्षुत्पिपासातिगः सत्यकामः सत्यसंकल्पश्च सोऽन्वेष्टव्यः, स विशेषरूपेण ज्ञातव्यः। यः पुरुषो गुरूपदिष्टेन मार्गेण तं ज्ञात्वा भजते स समस्तान् लोकान् सर्वान् कामान्, समग्राण्यैश्वर्याणि,

अखिलाश्च विभूतीर् अणिम-महिमादीन् भोगान् वा प्राप्नोतीति प्रजापति रुवाच । इतिश्रुतिमनुसृत्य उपासकैरुपासनाया अंगभूतान् परमात्मनः पापराहित्यादीन् धर्मान् स्वस्मिन्नाधाय ब्रह्मणः "सोहमस्मि" इति अभेदरूपेण क्रियतामुपासनम् । भक्ते जिज्ञासा विव उच्चानि विवेक-वैराग्यदीनि साधनानि न भवन्ति, अन्यत्तु सर्वं साधनजातं द्वयोस्तुल्यमेव । अतः "तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम्" (केनोपनिषत्) इति श्रुत्या तपः= प्रतिकारमन्तरा शीतोष्ण-स्पर्श-सहत्वम् । दमः=बाह्य-विषयेभ्य इन्द्रियाणां निरोधः। कर्म=यथाशक्ति स्ववर्णाश्रमधर्माणां परिपालनम्। वेदाः सर्वाङ्गानि=वेदानां तदंगानाञ्च स्वाध्यायः, ब्रह्मविद्याया उपासनाया वा पादाः । सत्यम्=मनसा वाचा परहितार्थं भाषणम्, उपासनाया आयतनम्=वासस्थानं चास्ति । तथा च अहिंसादीनां पंचानां यमानां पालनम् । अहिंसा=मनसा वाचा कर्मणा वा कस्यचिदपि प्राणिनो नानिष्टचिन्तनम् । सत्यम्=उक्तं पूर्वम्, अस्तेयम्=अचौर्यम्, ब्रह्मचर्यम्=स्त्रीस्मरणादेरष्टविधमैथुनस्य परित्यागः, विद्यमानायां स्त्रियाम् ऋतुकालाभिगमनम्, अपरिग्रहः=न कस्मादपि किञ्चिद् ग्रहणम्, स्ववस्तु अपि शरीरयात्रा-निर्वाहातिरिक्तं न संग्रहणीयम् इमे पंच यमाः ।

### उपासनाया (भक्तेः) गौणं फलम्

यदा उपासकः पूर्वोक्तसाधन-सम्पन्नो ब्रह्मणोऽभेदभक्तिं विदधाति, तदा तस्य अन्तःकरणं रजसि तमसि चाभिभूते सति एतावत् शुद्धसत्त्वगुणप्रधानं भवति, तस्मिंश्च ब्रह्मणः पापरहितत्वादीनां

सत्यकाम-सत्यसंकल्पान्तानां धर्माणां जायते विकासः। परं ते परमात्मसंबन्धिनो धर्मा न तत्र चिरं तिष्ठन्ति। यतोऽद्यावधि तस्य विविधरोगागारेण शरीरेण समं वर्तते संबन्धः। यदा तु प्रारब्धभोगस्य समाप्त्या नश्यति स्थूलं शरीरं तदा स "अथ यत्रैतदस्मात् शरीरात्" (छां. अ. ८, खं. ६, श्रुतिः ५) श्रुतेः "रश्म्यनुसारी" (ब्रह्मसू. अ.४ पादः,२ सू.१८) सूत्रस्य च प्रमाणेन सूर्यस्य किरणान् प्राप्नोति। "निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात्" (ब्र, सू. अ.४, पा. २, सू. १९) रात्रौ किरणाः न भवन्ति। यदा उपासको रात्रौ प्राणान् त्यक्ष्यति तदा कथं प्राप्स्यति सूर्यरश्मीनित्याशङ्क्य व्यासः समाधत्ते· यावत् शरीर मस्ति तावत् तेन किरणानां सम्बन्धोऽप्यस्त्येव, तस्मात् स रात्रावपि किरणान् प्राप्स्यति। "या एता" (छां. अ. ८ खं.६) इत्यादि श्रुत्या एता पिंगलाद्या नाड्यः संति सूर्येण संबध्दाः। सूर्यात् निस्सृत्य किरणा एता नाडीः संस्पृश्य पुनः सूर्यमुपगच्छन्ति। "अथ चैवास्मिन् छव्यं कुर्वंति यदि च नार्चिषमेवाभिसंभवन्ति" (छां. अ. ४, खं. १५) इति श्रुत्या एवंविधे उपासके मृत्युमापन्ने तस्य मृतकं कर्म कश्चित् कुर्याद् न वा कुर्यात् स सूर्यरश्मीन् प्राप्स्यत्येव। ततोऽहः शुक्लपक्षम् उत्तरायणं संवत्सरम् आदित्यं चन्द्रमसं विद्युतम् अमानवपुरुषं च सहकृत्य ब्रह्मलोक मुपैष्यति। "योगिनः प्रति च स्मर्यते स्मार्ते चैते" (ब्र. सू. अ.४ पा२ सू. २१) अस्मिन् सूत्रे कथितं यत् श्रुतिगता अहः-शुक्लपक्षादिशब्दा न कालवाचकाः सन्ति। सांख्ये योगे चैव योगिनः प्रति अहरादि शब्दैः कालो गृह्यते। संति चैते स्मार्ताः; न तु श्रुतिमूलकाः। "अतश्चायने

ऽपि दक्षिणे" (ब्र.सू.अ.४.पा.२.सू.२०) एतत्सूत्रप्रमाणेन स दक्षिणायनेऽपि पञ्चत्वमुपगतो ब्रह्मलोकं यास्यतीति। यतः "आतिवाहिकास्तल्लिंगात्" (ब्र० अ०४, पाद ३ सू०४) इति प्रमाणेन अर्चिर्दिन-शुक्लपक्षोत्तरायणादि-नामका उपासकस्य ब्रह्मलोकं नेतार इमे चेतना देवाः सन्ति, न तु मार्गचिह्नानि। "तेषामेवैष विरजो ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्" (प्र० उ० प्र० १, श्रु०१५) त एव रजोरहिताः तं ब्रह्मलोकं प्राप्नुवन्ति ये तपस्विनो ब्रह्मचारिणः सत्यभाषिणश्च सन्ति। "तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति" (१६) ते एव ब्रह्मलोकाधिकारिणो येषु नास्ति दम्भो मिथ्यात्वं कपटश्च। "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये" (मु० उ० मु० १ खं० २ मं० ११) एतेन—ये तपः-श्रद्धापूर्वकं वनमधिवसन्ति वानप्रस्थाः, रागद्वेषशून्या भिक्षाशनमश्नुवाना विक्षेपरहिताः संन्यासिनश्च सूर्यद्वारेण ब्रह्मलोकमभियन्ति। यत्र अविनाशी परमात्मा विराजते। "अप्रतीकालम्बनान्नयतीति बादरायणः" (ब्र० सू० अ० ४, पा० ३, सू० १५) ब्रह्मणः प्रतीकोपासकमतिरिच्य अन्यान् सर्वान् उपासकान् अमानवपुरुषो ब्रह्मलोकं नयति। ब्रह्मलोकं प्राप्तान् उपासकान् सम्प्रति व्यासो मुक्तनाम्ना व्यवहरति। "सम्पद्याविर्भावः स्वेन शब्दात्" (ब्र० सू० अ० ४, पा० ४ सू० १) "मुक्तः प्रतिज्ञानात्" (२) "आत्मा प्रकरणात्" (३) "अविभागेन दृष्टत्वात्" (४) एतेषां सूत्राणां प्रमाणेन स मुक्तपुरुषो ब्रह्मणोऽविभक्तः (अविभिन्नः) भवति, यथा अग्नौ निक्षिप्तो लोहपिण्डः तद्रूपतामायाति। "ब्राह्मेण जैमिनिरुपन्या-

सादिभ्यः" (५) जैमिनि राम्नाति स पापरहितत्वादिभिः सत्यकाम-सत्यसंकल्प-पर्यन्तैः ब्रह्मणो धर्मैः सम्पन्नो भवति। यथा तप्तायः-पिण्डे अग्नेरुष्णत्व-प्रकाशत्व—दाहकत्व—धर्मा आयान्ति। तथैव मुक्तस्य शुद्ध-सत्त्वगुणप्रधाने अन्तःकरणे ब्रह्मणो धर्माः समायान्ति। "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः" ( ६ ) औडुलोमेर्मतम्-यत् स चैतन्यमात्ररूपेणाऽवतिष्ठते, न तु ब्रह्मसम्बन्धिना ऐश्वर्येण। "एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः" ( ७ ) चैतन्यमात्ररूपेणाऽवस्थितावपि तस्मिन् ब्रह्मसंबन्धि औपाधिकमणिमाद्यैश्वर्यं भवत्येव, नात्र कापिः क्षतिः।"संकल्पादेव तु तच्छ्रुतेः" (८) मुक्तस्य संकल्पमात्रेण सर्वे भोगा उपतिष्ठन्ते, तस्य अन्य साधनाऽपेक्षा नास्ति। अर्थात् "अत एव चानन्याधिपतिः" ( ९ ) न हि तस्य कश्चित् पतिः=प्रभुः, न स परतन्त्रः। "अभावं बादरिराह ह्येवम्" (१०) बादरिर्ब्रूते मुक्तो मनसैव सर्वान् भोगान् भुङ्क्ते, न तस्य शरीरमिन्द्रियाणि च भवन्ति। "भावं जैमिनिर्विकल्पामननात्" ( ११ ) जैमिनिः मुक्तस्य शरीरम् इन्द्रियाणि च मन्यते। "द्वादशाहवदुभयविधं बादरायणोऽतः" ( १२ ) अयं व्यासस्याऽभिप्रायः—यदा मुक्तः आत्मानं शरीरसहितमिच्छति। तदा शरीरी भवति, यदा च शरीरं न कामयते तदा अशरीरी भवति। यतः स सत्यसंकल्पः। "तन्वभावे संध्यवदुपपत्तेः" (१३) यदा शरीरेन्द्रियाणामभावो भवति तदा तस्य स्वप्नावस्थावत् भोगा भवन्ति। "भावे जाग्रद्वत्" (१४) सशरीरेन्द्रियकस्य तस्य जाग्रदवस्थावत् स्थूलाः पित्रादयो भोगाः सम्पद्यन्ते।

"प्रदीपवदावेशस्तथाहि दर्शयति" यथैकेन दीपेन प्रज्वालिता अन्येऽपि दीपाः प्रकाशन्ते तथा मुक्तेन रचितानि शरीराण्यपि मन-इन्द्रिय-सहितान्येव भवन्ति ।

भगवान् व्यासो जीवनमुक्तस्य दशां वर्णयन् साम्प्रतं कैवल्य-मुक्तये सूत्रं विरचयति—

शांकरभाष्यम्

कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते । यावता तत्केन कं विजानीयात् (बृ० ४।५।१५) न तु तद्द्वितीय-मस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ( बृ० ४।३।३० ) सलिल एकोद्रष्टाऽद्वैतो भवति (बृ० ४।३।३२) इति चैवं जातीयका श्रुति विशेषविज्ञानं वारयति, अत उत्तरं पठति—"स्वाप्ययसंपत्योर-न्यतरापेक्षमाविष्कृतं हि" (सू० १६) स्वाप्ययः=सुषुप्तम् "स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" (छां० ६।८।१) इति श्रुतेः । संपत्तिः=कैवल्यम् ब्रह्मैव सन्ब्रह्माप्येतीति (बृ०४।४।६) इति श्रुतेः । तयोरन्यतरामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । क्वचित्सुषुप्तावस्था-मपेक्ष्योच्यते, क्वचित्कैवल्यावस्थाम् । कथमवगम्यते यतस्तत्रै-वैतदधिकारवशादाविष्कृतम् "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-विनश्यति न प्रेत्य संज्ञास्तीति" (बृ०२।४।१४) यत्र त्वस्य सर्वमात्मै-वाऽभूत् "यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति" (बृ०४।३।१९) (मांडूक्य, ५) इत्यादि श्रुतिभ्यः । सगुणविद्या-विपाकावस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ( इति शांकरभाष्यम् )

स्वाप्ययः आसु काश्चिच्छ्रुतयः सुषुप्तिमपेक्ष्य काश्चित्तु संपत्तिं, तदधिकारात् । ऐश्वर्यश्रुतयस्तु सगुण-विद्याविपाकावस्था-पेक्षया मुक्त्यभिधाने तु तदवस्थासत्तेर्यथा अरुणदर्शने संध्यायां दिवसाभिधानम् ( इति भामतीव्याख्या ) विशेषज्ञानाभावाभिधानं सुप्ति-मुक्त्योऽन्यतराभिप्रायेणेत्युक्तम् । इदानीमैश्वर्याभिधानस्य सगुणविद्या विषयत्वेन भिन्नगोचरत्वान्न विरोधाशंकेत्याह सगुणेति कथं तर्हि सगुणविद्याफले मुक्तिशब्दप्रवृत्तिरित्याशंक्य संध्यायां दिवसशब्दवत्प्रत्यासत्तिमात्रेणेति मत्वाह-तस्मादिति ॥१६॥ (इति आनन्दगिरीयव्याख्या) ।

अत्रायं भावः— कैवल्यस्य समीपवर्तितया जीवन्मुक्तिः क्रममुक्तिर्वा मुक्तित्वेन वर्णिता । न सा तात्त्विकी मुक्तिरिति । यथा दिवसस्याऽऽसन्नतया प्राभातिको रक्तिमा दिवसशब्देन व्यवह्रियते; न स वास्तविको दिवसः । दिवसस्तु सूर्योदये एव भवति । तथैव जीवन्मुक्तिरपि वास्तविकी मुक्तिर्नास्ति; किंतु ज्ञाता-ज्ञान-ज्ञेयादि-त्रिपुट्या अभावरूपा कैवल्यमुक्ति र्हि तात्त्विकी । इदानीं भगवान् व्यासः प्रकरणप्राप्तां जीवन्मुक्तिं पुनर्दर्शयति— "जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वात्" (१७) अन्या सर्वविधा अणिमादिविभूतिर्मुक्तपुरुषस्य भवति, परं न स जगतः उत्पत्तिं पालनं संहारञ्च कर्तुं शक्नोति "प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः" (१८) जगदुत्पत्त्यादि कार्यजातं तु सूर्यमण्डलस्थः परमात्मैव विदधाति । "भोगमात्रसाम्यलिंगाच्च" (२१) भवति हि मुक्तानां भोगमात्रे ब्रह्मणः समानता; अर्थात्-न

ते ब्राह्मसृष्टौ हस्तक्षेपं विदधति। इत्थम् उपासकस्य ( भक्तस्य ) पापरहितत्वादि सत्यकाम-सत्यसंकल्प–पर्यन्तं ब्रह्मैश्वर्यस्य प्राप्ति-रूपम् उपासनाया (भक्तेः) गौणं फलं प्रोक्तम्।

उपासनाया मुख्यं फलम्

"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" ( ब्र० सू० अ० ३, पा० ४, सू० ५१ ) श्रवण-मनन–निदिध्यासनानि विदधतो मानवस्य किंचित्प्रतिबन्धाऽभावे अस्मिन्नेव जन्मनि सम्यक् आत्मज्ञानं जायते। प्रतिबन्धक-सत्तायां तु भरत-वामदेवादिवत् जन्मान्तरेषु जायते संशयरहितम् आत्मज्ञानम्। "ब्रह्मलोकाभिवांछायाम्" (पंचदशी-ध्यान० श्लोकः ५१) यो हि ब्रह्मलोक-भोगानामभिलाष-मारुध्य आत्मविचारं विदधाति न स आत्मसाक्षात्कारं कर्तुं प्रभवति; अर्थात् स ब्रह्मलोकस्य वांछारूप–प्रतिबन्धतया नास्ति ब्रह्मज्ञानी। "वेदान्त-विज्ञान-सुनिश्चितार्थाः" ( श्लोकः ५२ ) इति शास्त्रप्रमाणेन ब्रह्मलोके सृष्ट्यन्ते ब्रह्मणैव समं मुक्तो भवति। अस्मिन् श्लोके मुण्डकोपनिषदः "वेदान्त-विज्ञान-सुनिश्चितार्था." (खं० २ मं० ३) इति मन्त्रस्य भावार्थ एवोक्तः। "कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात्" ( ब्र० सू० अ० ४, पा० ३, सू० १० ) शांकरभाष्यम्:— "कार्यब्रह्मलोक–प्रलय–प्रत्युपस्थाने सति तत्रैवोत्पन्न-सम्यग्-दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सह अतः परं परि-शुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते इति" कार्यब्रह्म–लोकस्य प्रलये समुपस्थिते तत्रैव येषां संशय-विपर्यय-रहितम् आत्मज्ञानमुत्पन्नम्; ते हि ब्रह्मलोकस्य अध्यक्षेण हिरण्यगर्भेण

सम [अहंरूप-विद्यावृत्ते राश्रयभूते सति विनष्टे सति] व्यापक-रूपं परमं पदं प्राप्नुवन्तीति भाष्यार्थः।"न च पुनरावर्तते न च पुनरावर्तते" ( छां० अ० ८ ) अन्तिमश्रुत्या "अनावृत्तिः शब्दात् अनरावृत्तिः शब्दात्" ( ब्र० सू० अ० ४, पा० ४ ) इत्यंतिम-सूत्रस्य चानुसारं यः पुरुषो ब्रह्मलोकस्य भोगानुपभुज्य कैवल्य-मुक्तेर्भावनया ब्रह्मलोकं प्राप्तः तस्य पुनरावृत्तिर्न भवति। इदं तात्पर्यम्-महाप्रलये जीवमात्रस्य त्रिपुत्थभावेन द्वैत-रहिता कैवल्य-मुक्तिः सम्पद्यते, सा चाऽस्ति सापेक्षा मुक्तिरिति। या च अस्मिन् लोके ब्रह्मलोके वा आत्मज्ञानद्वारा मुक्तिर्जायते सा तु निरपेक्ष-कैवल्यमुक्तिरित्यनयोर्भेदः। इत्थं मायाविशिष्टस्य सर्वज्ञस्य सर्व-शक्तिमतो ब्रह्मणः अभेदभक्तेर्मुख्यं फलम् आत्मज्ञानप्राप्तिः। आत्मज्ञानस्य च फलं कैवल्यमोक्षः। अयमेवार्थः श्रुतिभिः सूत्रैश्च निर्णीयते।

जीवात्मनो वास्तविकं स्वरूपं तथा ज्ञेयं ब्रह्म

"सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयं" ( छां० अ० ६, खं० २) इदं कार्यकारणरूपं जगत् सृष्टेः प्राक् एकमेव अद्वितीयं सत् आसीत्। "सदेव सदित्यस्मितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरंजनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः ( शां० भाष्यम् )" अर्थात् इच्छाशक्तौ स्वाधिष्ठाने सति लीनायां सत्यां शक्तेराच्छादके ( स्वविषयात्मके ) कल्पितरूपे निवृत्ते सति न स पृथक् ( भिन्नरूपेण ) गण्यते। तस्मात् तत् सत् महाप्रलये सांख्याभिमत-प्रधानाद् व्यतिरक्तं, कणादांगीकृ-तपरमाणवादि-

रूपात् शून्यं, वैनाशिक-सम्मत-शून्याद् विलक्षणं निर्विशेषं निरावरणं निरंजनम् अखण्डम् अद्वैतं शुद्धं ब्रह्म आसीत्, न तु विशिष्टम् अद्वैतं ब्रह्म। इदं तात्पर्यम्:—महाप्रलयस्य आरम्भावस्थायां सतः (सच्चिदानन्दस्य) कारणावस्था विलीना भवितुमारभते। महाप्रलयस्याऽन्तिमावस्थायां सतः कारणावस्थाया आरम्भो जायते। तस्मात् तत् महाप्रलयस्य मध्यावस्थायां मायाऽविद्याभ्यां रहितत्वात् स्वगतादिभेदत्रय-शून्यं चतुष्पाद-विशुद्धं निरपेक्षं निर्गुणं ब्रह्म आसीत्। तस्मात् तत् द्वैत-रहितम्। एतेनैव हेतुना एतदध्यायस्याऽष्टमे खंडे शांकरभाष्ये श्रुतीनां प्रमाणैः सुषुप्तौ, मरणे, निर्विकल्पे समाधौ, महाप्रलये च सत् द्वैतरहितं पूर्णं ब्रह्म स्वीकृतम्। येऽद्वैतवादिनः सन्तोऽपि आसु चतसृषु अवस्थासु सतः तदहंरूपाया अविद्याशक्तेः पृथक् सत्तां स्वीकुर्वन्ति ते द्वैतवादिनः सन्ति, नाद्वैतवादिनः। नाद्या-वधि ते कस्यांचिदपि अवस्थायां सत् द्वैतरहितम् शुद्धं ब्रह्म साधयितुं समर्था अभवन्, न च भविष्यन्ति। एतद्धि कारणम्-अविद्याया बाधिका "अहं ब्रह्मास्मि" एषा विद्यावृत्तिरपि अंते स्वाश्रये आत्मनि लीना भविष्यति। यस्मात् विद्याविद्ययोः सद् आत्मैव आधारः। कैवल्येऽपि द्वैतमेव सिद्धं भविष्यति, न सेत्स्यति आत्मा शुद्धं ब्रह्मेति दिक्। तस्मात् तत् सत् महाप्रलये अखंडं ब्रह्म, अथवा निरपेक्षं व्यापकमासीत्। "तदैक्षत बहु स्यां प्रजायेयेति" तेनेच्छा कृता अहं बहुः स्यां नाम-रूपाभ्यां प्रकटेय-मिति। अयं भावार्थः—तस्य एकपादे विशुद्धे सति महाप्रलयस्य

अंतिमावस्थायाम् अहंवृत्तिरुत्पन्ना । सेयमहंरूपा इच्छाशक्तिः सद्ब्रह्माश्रिता तथा सद्ब्रह्म विषयं करोति आवृणोति वा । तेनैवेयं स्वाश्रया स्वविषया विनिगद्यते । साम्प्रतं सा स्वाश्रयभूता, स्वविषया सम्पन्ना आच्छादिका वा संजाता । अर्थात् अभिन्नतां परित्यज्य भिन्नेव संवृता । तथैव द्वैतरूप–कारणवृत्तिद्वारा तदेव शुद्धं सत् कारण-ब्रह्म-रूप-मायाविशिष्टः ईश्वरः तथा अविद्यायुक्तः प्राज्ञ ईश्वरः सम्भूतः । यथा मृत्तिका एका शुद्धा नामरूपाभ्यां पिण्डरूपतां भजते सा च पिण्डात्मना द्वैतरूपेवाऽवभासते कथ्यते च । तद्-द्वारैव शुद्धमृत्तिकायां घटादेः कार्यजातस्य कारणता आयाति । तथैव शुद्धे सति अहंवृत्तिद्वारा कारणता आरोप्यते आरभ्यते वा । अपरयेच्छया सद्रूपेण कारणब्रह्मणा बुद्धिप्रधानायाः कार्यरूपायाः सूक्ष्मसृष्टे रचना कृता । तद्–द्वारैव तत् सत् कारण-ब्रह्मरूपेण कर्तृरूपो हिरण्यगर्भस्तथा तैजस इति नाम्ना संजातम् । सद्रूपे कर्तरि वैश्वानर-विश्वरूपसंभवाय तृतीयेच्छा स्थूल-सृष्ट्यर्थं संजाता । एवंविधामिच्छां कृत्वा "तत्तेजोऽसृजत" । तेन सद्रूपेण कर्त्रा तेजः समुत्पादितम्, तेजसा सद्रूपेण कर्त्रा हिरण्यगर्भेण तैजसेन च तेजः समुत्पादितम् । तेजसा जलं, जलेन पृथ्वी निर्मिता । तासां त्रिवृत्करणं कृत्वा " सेयं दैवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" । ( खण्डः ३. २ ) ईक्षणारहितस्य शुद्धस्य सतः = सच्चिदानन्दस्य ब्रह्मणः परोक्षतया तच्छब्देन निर्देशः सा इति, ईक्षणा-

महितस्य तस्यैवास्य च सतः अपरोक्षतया इदंशब्देन निर्देशः इयमिति। तया सद्रूपया देवतया इच्छा कृता यदहं सम्प्रति तेजः प्रभृतिषु तिसृषु देवतासु जीवरूपेण प्रविश्य नामरूपे व्याकरवाणि = प्रकटीकुर्याम्। "सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत।" (खण्डः ३. ३.) सेयं पूर्ववत्। ततस्तया सद्रूपया देवतया आसु देवतासु जीवरूपेण प्रविश्य (विष्णुशिवादि) नामरूपं प्रकटीकृतम्। अतः नास्त्यत्र द्वैतवादिनां द्वैतवादस्यावकाशः।

[ पञ्चदश्याः चित्रदीपस्य आद्येषु चतुर्षु श्लोकेष्वपि सृष्टेरुत्पत्तिः शुद्धात् ब्रह्मण एव जातेति वस्त्रदृष्टान्तेन दर्शितम्। यथाहि एकमेव वस्त्रं द्रव्यान्तर-संबन्धमन्तरा धौतम्, अन्न-विलेपनेन घट्टितम् मस्यादियुक्तं लांछितं, वर्णारोपेण च रंजितं भवति। यथैकस्यैव वस्त्रस्य चतस्रः संज्ञा स्तथैक एव परमात्मा, माया-तत्कार्य-रहितः चित्, मायायोगेन अन्तर्यामी, सूक्ष्मसृष्ट्या सूत्रात्मा, स्थूलसृष्ट्या च विराट् इति संज्ञायते।] एतद् अमुना प्रकारेण ज्ञेयम् - यथा मनुष्यः एकरूपः (साकारः) पदार्थः। यावद् अनेन गुण–कर्म–जाति–देशादयो न संबध्यन्ते तदैतस्य आचार्यः राजा, मंत्री, कृषीवलः, द्वारपालः एवं पुत्रादिसंबन्धेन पिता, प्रभृतयो मिश्रिता विशिष्टा (सगुणाः) संज्ञाः संपद्यन्ते। सम्प्रत्यस्मिन् मनुष्यात्मकं रूपं गुणः, कर्म, जातिः, संबन्धो वा वस्तुद्वयं निष्पद्यते। एतानि मिश्रितानि सगुणानि वा नामानि इमानि चेतरेतरभिन्नानि। तस्माद् नृपो द्वारपालाद् भिन्नो द्वारपालश्च नृपात् भिन्नः। परन्तु

व्यापकम्। तथैव सतः सच्चिदानन्दस्याऽपि एकं सामान्यं रूपमस्ति यद् ब्रह्म व्यापकं वा विद्यते। यावदस्मिन् अहंवृत्तिः नोत्पद्यते तावत् स (सच्चिदानन्दः) निर्गुणो निराकारस्तिष्ठति। यदा अस्मिन् अहंवृत्तिरुत्पन्ना तदास्य शुद्ध-सात्त्विक-वृत्त्या अन्तर्यामी, हिरण्यगर्भः, वैश्वानरः इति नामधेयम् संपद्यते। यत्र यत्र सति सुद्ध-सात्त्विक-वृत्तेरपेक्षया किंचित् मलिना सात्त्विकी वृत्ति-रुत्पन्ना तत्र तत्र सत एव प्राज्ञ-तैजस-विश्वानि सगुणानि नामानि सम्पन्नानि (विष्णुः शिवः प्रजापतिरिन्द्रवरुणादयो देवा दानवा मानवाःकीटाः पतंगाः तरु-गुल्माः सद्रूपस्य विश्वस्यैव नामधेयानि)। यतोऽस्मिन् सम्प्रति सदात्मकं रूपं गुणादिकञ्च वस्तुद्वयं संजातम्। इमानि सगुणानि नामानि अन्योन्यभिन्नानि। तस्मादेव आदित्य-स्थानिन ईश्वराद् देव-दानवादयो भिन्नाः, देव-दानवादिभ्य श्चेश्वरो भिन्नः। परन्तु सच्चिदानन्दात्मकं रूपम् ईश्वरादिषु सर्वेषु व्यापक मस्ति। इत्थं तत् एकमेव सत् अनेकतामभजत्। अयमेव विवर्तवादः (एकस्यैव वस्तुनः स्वरूपाऽपरित्याग-पूर्वकमन्य-रूपेण प्रतीतिः) कथ्यते। अर्थात् तदेव एकम् अद्वितीयं सत्, इच्छा-रूपेण मनसा संयुज्य संसारितामुपगतम् उपास्यम् उपासकं वा जातम्। (सृष्टिक्रमस्य विशिष्टबोधार्थं मन्निर्मितम् "वैदिक-ब्रह्म-विचार" नाम हिन्दी पुस्तक मवलोकनीयम्)। एवंमुक्तरीत्या "सदेव" अनया श्रुत्या सतः महाप्रलये निर्गुणरूपां निष्प्रपंचावस्थां दर्शयित्वा तथा च, "तदैक्षत" इत्यारभ्य सप्तमखंडपर्यन्तं सतः, सृष्टेः=प्रपंचस्यो-त्पत्ति मध्यारोपं वा प्रदर्श्य; सम्प्रति पुनः तस्मिन्नेव सति सृष्टेः-

प्रपंचस्यापवादम् अभावं लयम् वा दर्शयति । अष्टमखंडस्य प्रथमा श्रुतिरवलोक्यताम् । "उद्दालको हारुणी श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति, यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति. स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति " ( १ ) आरुणिना उद्दालकेन स्वं पुत्रं श्वेतकेतुं प्रति कथितम् सोम्य ! साम्प्रतं मत्सकाशात् सुषुप्तिं विशेषेणाऽवगच्छ, यस्यामवस्थायाम् एष पुरुषः स्वपिति नामको भवति तदा सता सम्पन्नो जायते, एष आत्मानं प्रतिपद्यते, तस्मा-देव लोका एतं स्वपितिं ( शयितारम् ) वदन्ति । यतः स आत्मानं प्राप्तो भवति । "यन्मयो यत्स्थश्च जीवो मनन-दर्शन-श्रवणादि-व्यवहा-राय कल्पते तदुपरमे च स्वं देवतारूपमेव प्रतिपद्यते" ( शांकरभाष्यम् ) जीवो येन रूपेण यस्मिन् स्थित्वा च मनन-दर्शन-श्रवणादिकं व्यवहारं विदधाति (सुषुप्तौ) तस्मिन् मनसि उपरते स्वं परं देवतारूपं प्राप्तो भवति । "नह्यन्यत्र सुषुप्तात् स्वम-पीतीति जीवस्येच्छन्ति ब्रह्मविदः" ब्रह्मवेत्तारः सुषुप्तेः भिन्नायामन्य-स्यामवस्थायां ( जाग्रत् स्वप्नयोः ) जीवस्य स्वरूपस्य प्राप्तिं न मन्यन्ते, सुषुप्तावेव मन्यन्ते। "जीवात्मना मनसि प्रविष्टा नाम-रूप व्याकरणाय परा देवता सा स्वमेवात्मानं प्रतिपद्यते जीवरूपतां मन आख्यां हित्वा" नाम-रूपे प्रकटयितुं मनसि प्रविष्टः परमात्मा मनोनामधेयकं जीवरूपं परित्यज्य स स्व-स्वरूपं प्राप्नोति । "मनसि प्रविष्टं मन आदि संसर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत्परमार्थसत्यमपीतो=अपिगतो भवति" मनसि प्रविष्टः स मन

आदि संबंधेन निष्पन्नं जीवरूपं हित्वा स्वं परमार्थसत्यं सद्रूपमधिगच्छति । "अतस्तत्सत्त्वमसीति श्वेतकेतो" हे श्वेकेतो ! तत् सत् त्वम् असि । भाष्ये तत्त्वमसि वाक्यस्याऽयमेवाऽर्थः कृतः । इत्थं भाष्ये अहंवृत्तिरहितं शुद्धं सत् तत्पेदन गृहीतम् । एतेन त्वंपेदन द्वयोर्जीवेश्वरयोर्ग्रहणं भवति । इदं तात्पर्यम्—सृष्टेः प्राक् यत् द्वैतरहितं सत् आसीत्, इच्छया यच्च तेज आदि निर्माय तत्र जीवरूपेण प्रविष्टं तदेव सत् सुषुप्तेर्मध्यावस्थायां मनसि सति लीने द्वैतरहितं पूर्णं ब्रह्म भूतम्, त्वं तदेवाऽसि । अर्थात् मनसो निरुद्धावस्थायां नास्ति तत्त्वमोर्भेदः । यतः अहंवृत्तिरहितस्य सतः परोक्षं नाम तत्, सद्रूपस्य तस्याऽहंवृत्ति–सहितस्य अपरोक्षं नाम त्वम् इति । स्मर्यताम्—अहमिति एका सत्त्वरजस्तमोगुणरूपा सामान्यावृत्तिः, इयमेव सतः संसारित्वे हेतुः । अनयैव सतो मायाविशिष्ट ईश्वरः तथा अविद्यायुक्तश्च प्राज्ञः ईश्वर इति नामधेये । कारणशरीरस्याऽभिमानी प्राज्ञोऽपि ईश्वर एव । अस्यैव कठे "अव्यक्तात्त पुरुषः परः" इति अव्यक्तं नाम । नेयं सामान्या वृत्तिः कस्यचित् विशेषार्थस्य बोधिका । अस्यैव तैत्तरीये आनन्दमयकोशो नाम, मुण्डके च "अक्षरात्परतः परः" इति अक्षरं नाम । यद्धि क्षररूपकार्यापेक्षयाऽयम् अक्षरः=अविनाशीति । यदानया अहंवृत्त्या समं कर्तृभोक्तृपदानां प्रयोगो भवति तदा सैवाहंवृत्तिः अज्ञानाभिधाना जायते । अस्याः सहचरस्य सच्चिदानन्दस्य अज्ञानीति नामकरणं जायते । यदा अनया अहंवृत्त्या "सच्चिदानन्दं ब्रह्मास्मि" इत्यभिधीयते तदाऽस्या वृत्तेः नाम

विद्या ( ज्ञानम् ) इति। अस्याः सहचरस्य सतो नाम विद्वान् (ज्ञानी) इति जायते। अर्थात् अस्या एव अहंवृत्तेः प्रधानं, प्रकृतिः, माया, अविद्या, अज्ञानम्, आवरणम्, मनः, बुद्धिः, चित्तं चेति स्थूलसूक्ष्माणि नामानि। ये हि अहंवृत्तेः परम् अज्ञानं कल्पयित्वा सुषुप्तौ अहंवृत्तिरज्ञाने लीयते इति वदन्ति ( अहंवृत्ति-सच्चिदानन्दयोर्मध्ये अज्ञानकुड्यं कल्पयन्ति ) तैः "प्राणबन्धनं हि सोम्य मनः" अर्थात् मनसः सत् एव आधारः, इयं श्रुतिः तद्भाष्यं च न ध्यानपूर्वकं दृष्टमिति। भाष्ये हि मनसो लयः सति एव वर्णितः न तु अज्ञाने। तस्मादेव भाष्येण सुषुप्तौ सत् द्वैतरहितं शुद्धं ब्रह्म साधितम्। सम्पूर्णां सुषुप्तिम् आनन्दमयकोशं (कारणशरीर) मन्वानैस्तैः पंचदश्या योगानन्द-प्रकरणे ४४, ४५, ५६, १६ संख्याकाः श्लोका अपि नावधा-नेनावलोकिताः। एषु श्लोकेषु सुषुप्तेरादिमामवस्थामानन्दमय-कोशं मत्वा सा जीवस्य अवस्था वर्णिता, तमेव जीवश्च सुषुप्तेर्मध्या-वस्थायां (गाढ़सुषुप्तौ) द्वैतरहितं पूर्णं ब्रह्मेत्याहुः। तैत्तरीयेऽपि "ब्रह्म पुच्छं प्रतिष्ठा" आनन्दमयकोशरूपस्य पक्षिणः आधारो ब्रह्मेति निगदितम्। तस्माद् अहंवृत्तेः परस्तात् केवलं सच्चिदा-नन्दं ब्रह्मास्ति, नास्ति अविद्या (अज्ञानं कारणशरीरं वा) नाम किमपि वस्तु। अतो गाढ़सुषुप्तौ एतत् द्वैतरहितं पूर्णं ब्रह्मैवास्ते। इत्थं पूर्वोक्त-श्रुतिभिः भाष्येण च साधु साधिततम् यज्जीवात्मनः अहंवृत्ति-रहितं वास्तविकं स्वरूपं सच्चिदानन्दं ब्रह्मेति एतदेव ज्ञेयं ब्रह्म।

## आत्मज्ञानस्याधिकारी

अयं जीवात्मा वस्तुतः सच्चिदानन्दरूपोऽपि सन् स्वस्य अहंरूपया अविद्याशक्त्या पुण्य-पापयोः कर्ता, तत्फलस्य सुख-दुःखस्य भोक्ता भूत्वा पंचविध-विषयात्मके संसारे इष्टप्राप्तये अनिष्ट-निवृत्तये च कदाचित् उच्चासु कदाचिच्च नीचासु योनिषु भ्रमति। यदा केनापि पुण्यकर्मणा निष्कामं कर्म विदधाति तदाऽस्य अन्तःकरणस्य मलाभिधानो दोषो दूरीभवति। (मलम्=रागद्वेषौ) ततः ईश्वरस्मरणादिरूपां निष्कामभक्तिं करोति, तयाऽस्य विक्षेप-दोषस्य निवृत्तिर्जायते। ( विक्षेपः=चित्तचाञ्चल्यम् ) यदा आवरणाभिधानस्तृतीयो दोषोऽवशिष्यते ( आवरणम्=स्वपरमार्थ-रूपानवबोधः ) स च ज्ञानेन नश्यति। विवेको, वैराग्यं, शमादि-षट्सम्पत्तिः, मुमुक्षुता, श्रवणं, मननं, निदिध्यासनं समाधिश्चेति, इमान्यष्टसाधनानि ज्ञानस्य। एष्वपि विवेकादीनि चत्वारि श्रवणस्य साधनानि। श्रवणादीनि तु चत्वारि ज्ञानस्य साक्षात् साधनानि। विवेकः=सच्चिदानन्दं ब्रह्म सत्यं, जगत् मिथ्या चेति विचारः। वैराग्यम्=इहामुत्रभोगेषु ग्लानिः। शमादिषट्सम्पत्तिः- (क) शमः=भुक्तविषयेभ्यो मनसो निरोधः (ख) दमः=शास्त्रनिषिद्ध-विषयेभ्यः इन्द्रियाणां वारणम्। (ग) श्रद्धा=असाम्प्रदायिकेषु उपनिषद्वाक्येषु तन्मूलकेषु गुरुवाक्येषु च विश्वासः। (घ) समाधानम्=अनागत-विषय-चिन्तनात् मनसो निरोधः। (ङ) उपरतिः=स्वयम्प्राप्तेषु विषयेषु त्यागबुद्धिः ( उपेक्षा )। (च) तितिक्षा=शीतोष्णादिद्वन्द्वानामप्रतिकारपूर्वकं सहनम्। ( इदं

तृतीयं साधनं शमादि-षट्-सम्पत्तिः)। ४—मुमुक्षा=मोक्षस्येच्छा। (इमानि चत्वारि साधनानि ज्ञानस्य) एभिः सर्वो जनः ज्ञानाधिकारी (ज्ञान—साधनश्रवणादीनाम् अधिकारी) जायते। १-श्रवणम् = गुरुमुखात् तत्त्वमस्यादिमहावाक्यानां श्रवणम्। २—मननम् = एकान्ते जीवब्रह्मणोरभेदसाधक-युक्तिपूर्वक-श्रुत—महावाक्यानां चिन्तनम्। (एतैः अधिकारी ब्रह्मविद् भवति) ३—निदिध्यासनम् = (सविकल्प—समाधिः) बुद्धिवृत्तेः स्वस्वरूपे सच्चिदानन्दे ब्रह्मणि "अहं ब्रह्मास्मि" इति सततः प्रवाहः (अनेन ब्रह्मविद् पुमान् ब्रह्मनिष्ठः संजायते)। ४—निर्विकल्प-समाधिः = "अहं सच्चिदानन्दोऽस्मि" अस्या वृत्तेरपि सच्चिदानन्दे ब्रह्मणि लयः (अनेन समाधिना ब्रह्मनिष्ठो ब्रह्मैव सम्पद्यते)। इदं तात्पर्यम्-विवेकादि-ज्ञानसाधनरहितोऽपि अनधिकारी मनुष्यः, श्रवण-मननाभ्यां ब्रह्मविद् भवति। यथा सम्प्रति केचिज्जना ब्रह्मज्ञान-कथनेन ब्रह्म वेत्तारो भूत्वा जगति राक्षसा इव प्रवर्तन्ते। परं यो हि विवेकादीनि ज्ञानसाधनानि श्रवण-मनन-निदिध्यासन-समाधीन् अनुष्ठाय ब्रह्मविद् भवति, वस्तुतः स एव उत्तमो ब्रह्मवित्।

## ज्ञानिनो व्यवहारः

शास्त्रानुसारं ब्रह्मवित् ब्रह्मचर्यादिषु निम्नाश्रमेषु स्व-प्रारब्धानुरूपं गच्छति। परम् उच्चेभ्यः संन्यासाद्याश्रमेभ्यो निम्नाश्रमेषु नायाति। अर्थात् ज्ञानिनो व्यवहारः अन्येषां मनुष्याणां कृते आदर्शरूपो भवति। स यस्मिन्नाश्रमे तिष्ठति तस्य धर्मान् पालयति न तु तानुल्लङ्घते।

## आत्मज्ञानस्य फलम्

"तदधिगम उत्तर-पूर्वाघयोरश्लेशविनाशौ" (ब्र० सू० अ० ४, पा० १, सू० १३) आत्मनो वास्तविकरूपस्य साक्षात्कारे आत्मज्ञस्य पूर्वेषामपरेषाञ्च पुण्यपापानाम् अश्लेश-विनाशौ भवतः। अर्थात् पूर्वेषां संचितकर्मणां विनाशो भवति, आत्मज्ञाने सम्पन्ने सति उत्तरकर्मणां पुण्य-पापे न तं स्पृशतः। "भोगेन त्वितरे चपयित्वा संपद्यते" ( सू० १९ ) प्रारब्धकर्माणि भोगेन समाप्य ब्रह्मरूपतामापद्यते। अस्य सूत्रस्य आधारः छांदोग्यस्य षष्ठाध्यायस्य श्रुतिरियम् "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति" =तावदेव तस्य ब्रह्मरूपाय विलंबो भवति यावत् स प्रारब्धकर्माणि उपभुज्य न समापयति। तदनन्तरं तु स सद्रूपतां भजते एव। "अथाकामयमानो..." (बृ० अ० ४, ब्राह्मण ४) कामनारहितस्य निष्कामस्य आत्मकामस्य च नोत्क्रामन्ति प्राणाः। अत्रैव लीयन्ते, स ब्रह्मभूतः सन्नेव ब्रह्मणि लीयते, ब्रह्मात्मतां प्रतिपद्यते। इत्थं स ब्रह्मविद् मुक्तो भवति। "स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि" (ब्र० सू० अ० ४, पा० ४ सू० १६) सुषुप्तौ कैवल्यमुक्तौ च ज्ञाता-ज्ञान-ज्ञेय रूपस्य विशेषज्ञानस्य अभावो भवति। अयम्भावः-सुषुप्तावस्थायां मनोवृत्तिः कर्म-वासना-सहिता स्वाश्रये सति लीयते, तस्मादेव ततः पुनरावर्तते। परं कैवल्यमुक्तेरवस्थायाम् "अहं ब्रह्मास्मि" एवंविधा मनोवृत्तिः कर्मवासनाभ्यां रहिता स्वाश्रये सच्चिदानन्दे ब्रह्मणि लीयते, न ततो व्युत्थिता भवति। एतावदेवाऽनयोरन्तरम्। इत्थम् 'अहं सच्चिदानन्दं ब्रह्मास्मि" एतस्य आत्मज्ञानस्य

फलं स्वस्वरूपेऽस्थानं कैवल्यमोक्ष एव ।

इत्यभिसंधिः—वेदोक्त-वाक्यानुसारं भक्तेः (उपासनायाः) आत्मज्ञानोत्पत्ति मुख्यं फलम, आत्मज्ञानस्य च फलं मोक्षः । अतो भक्ति ज्ञानस्य साधनम् , ज्ञानञ्च मोक्षस्य साधनम् । नास्ति स्वतन्त्ररूपेण भक्तिः मोक्षस्य साधनमिति शम् ।

इतिश्रीदण्डिसंन्यासिना रामतीर्थेण विरचितं
वेदोक्त–भक्ति–ज्ञान–फलम समाप्तम् ।



---

## सूचनाः—

त्रुटित पाठाः

१६ पृष्ठे, १७ पंक्तौ 'संबध्यन्ते' इत्यस्याग्रे "तावदयं निर्गुणरूपः । यदैतस्य गुणकर्मादयः सम्बध्यन्ते" इति पूरणीयम् ।

१६ पृष्ठे, २३ पंक्तौ 'परंतु' इत्यस्याग्रे "मनुष्यात्मकं रूपं द्वयोरेव" इति पूरणीयम् ।

अधिकः पाठः

१५ पृष्ठे १६ पंक्तौ 'तेन सद्रूपेण कर्त्रा' इत्यस्मात् परः "तेजः समुत्पादितं तेजसा सद्रूपेण कर्त्रा" इति पाठः अधिको विद्यते, अनुपयुक्तश्च ।

## श्रीदण्डिसंन्यासिना रामतीर्थेन निर्मितानि पुस्तकानि

१—शास्त्रीय धर्म दिवाकर ( हिन्दी भाषायाम् )

२—वैदिक ब्रह्म विचार ,, ,,

३—वेदोक्त नित्य कर्म ,, ,,

४—विचारसागर के पूर्वापर सिद्धान्तमें महाविरोध ,, ,,

५—वेदोक्त—भक्ति-ज्ञान-फलम् ( संस्कृत भाषायाम् )

६—वेदोक्त भक्तिज्ञान तथा इनका फल (हिन्दी भाषायाम्)



मुद्रक— हिन्दू इलैक्ट्रिक प्रेस, इन्दौर ।